# तत्वबोध:-



ग्रंथकर्ता

स्वामी विरुपाक्ष वडेयर वेदतीर्थः

# तत्वबोधः-



ग्रंथकर्ता

**स्वामी विरुपाक्ष वडेयर वेदतीर्थः**

# तत्वबोधः-



ग्रंथकर्ता

स्वामी विरुपाक्ष वडेयर वेदतीर्थः

यः सन्मान्यो राजराजेश्वराणाम्। सोयं धीमान् श्रीविरुपाक्षदेवः ॥

स्वामी विरुपाक्ष वडेयर वेदतीर्थः

श्रीः

# तत्त्वबोधः



## तत्रादौ "ईश्वरसिद्धिः"

भगवता वेदेन निर्दिष्टमात्मलक्षणं कथं सभाव्येतेति यदा विचिकित्सा स्यात् तदा प्रत्यक्षानुमानागमानुभवप्रमाण परीक्षणे नैव स्वतः प्रतीयते । अतः अस्ति तत्र जिज्ञासा या आवश्यकतेति । यतोहि—

"वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वा अतिमृत्यु मेति नान्यः पंथा विद्यते अयनाय ॥

यजुर्वेदे, अ. ३१

इत्यनेन गुणगणगरिमा स्वप्रकाशविज्ञानस्वरूपः अज्ञानाविवेकाविद्यामायामोहादिवृत्तिभ्यः पृथक् स्थायी स्वाभाविकसर्वशक्त्युद्भूतः सर्वज्ञानाकरः सर्वज्ञानबोधकः सर्वजगत्प्रेरकः कर्ता कोऽप्यस्तीत्यनुमीयते ।

अतएव जानात्ययं "अहंज्ञानीअभवम्" इति तदेतादृश स्वस्वरुपात्मज्ञानं ज्ञात्वैव पुनर्जननमरणाद्यसहनीयसांसारिकोपद्रवादतिक्रांतो भवितव्य इति । अर्थात् स्वस्वात्मनः सत्वगुणेनैवेतराणि रजस्तमोगुणादीन्युन्मील्य शुद्धसात्विकः सन् शाश्वतसुखमनुभूयमानो भवेदिति । तस्मादतिरिक्तमार्गएव नास्तिपारमार्थिकविषये इति निश्चीयते । अतएव सर्वैः सुखसंपादनार्थं सत्वगुण एव ग्राहय इति सूच्यते ॥

## "आत्मानात्मविवेचनम्"

आत्मन एकत्वं भिन्नत्वं अनंतत्वं मन्यमानाः केचनात्मवादिनो बहुधा विप्रतिपत्तिं विषयेऽस्मिन् दर्शयंतो विवादं कुर्वंतो दृश्यंते । तद्यथा —

"एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन"

इत्यादिभिरात्मन एकत्वम् । तथा—

"द्वासुपर्णा सयुजा सखाया एकं स्वाद्वत्ति अनश्नन् अन्योऽभिचाकशी"

इत्यादिवेदवाक्यैर्भिन्नत्वम्, एवमात्मनोऽनेकत्वं मन्यमानाः श्रुतेरपार्थं कल्पयंतीति विभाव्यते । अतो मयाप्येतद्बहुधा विचिंत्य यथावद्वस्तुस्थितिरेव निर्दिश्यते । यथा नित्य शुद्ध बुद्ध मुक्तदशायामेकत्वमेवेति श्रुतिस्मृत्यादयः प्रमाणयंति ।

"इंद्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्य सुपर्णोगरुत्मान् । एकं सद्विप्रा बहुधा वदंत्यग्निं यमं मातरिश्वानमाहुः ॥

ऋग्वेद अ. १

**स ब्रह्मा स विष्णुः स रुद्रः स शिवः सो अक्षरः स परमः स्वराट् । स इंद्रःस कालाग्निः स चंद्रमाः ॥**

( कैवल्योपनिषदि )

एतमेके वदंत्यग्निं मनुमन्ये प्रजापतिम् । इंद्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥ ( मनुस्मृतौ अ. १२ )

इत्यादिश्रुतिस्मृतिवाक्यैरेकएवात्मा अनंताभिधानै रभिधीयत इति सुस्पष्टं भाति ॥ एतस्मादतिरिक्तं सर्वं अनात्मैवेति ज्ञातव्यम् ॥

## "माया-प्रकृतिः"

एवं प्रकृतित्वं नाम साक्षात् परंपरया या गुणकर्मजनिताखिलविकाराणामुपादानत्वम् । प्रकृष्टाकृतिः परिणामरूपा अस्या इति व्युत्पत्तः साच प्रकृतिः, माया, अविद्या, शक्तिः प्रधानेत्यादिपर्यायवाचकैरनुभण्यते । तथा स्मृतावपि

"ब्राह्मीति विद्याविद्येति मायेति च तथा परे । प्रकृतिश्च परा चेति वदंति परमर्षयः ॥"

परं "सत्वरजस्तमसां साम्यावस्था मूलप्रकृतिः" इति वाक्येन परिणामित्वाविकारित्वसुख-दुःखमोहात्मकत्वचतुर्विंशतितत्वाव्द्युतिरेव प्रकृतिरिति सिद्धांतः ॥

चैतन्याचैतन्यव्यापिका रागद्वेषधर्माधर्मोत्पादिका विपाकादिपारिवृता चेत्यादिलक्षणलक्षिता माया इति वेदांतिनां डिंडिमः ॥

परं साम्यावस्थेत्यत्र न्यूनाधिकभावेनासहंनना वस्थाया या स्थितिः सा साम्यावस्थेति बोध्यम् । तथा यदि यः कोऽपि वदेत् सत्वाद्यातिरिक्ता इयं प्रकृतिरिति चेन्न सत्वादयो गुणाः प्रकृतिमूला इति । तथैव

# सत्वरजस्तमोगुणत्रयस्याविर्भावः

"सत्वं रजस्तम इति प्रकृतेरभवन्गुणाः

इत्यादिप्रकृतिकारणवचनानि वनस्य वृक्षा इतिवत् सामान्येनोपलक्षितानीति ज्ञेयम् । यतः सांख्ययोगादिशास्त्रेषु प्रकृतिधर्मत्वं प्रतिषिध्य प्रकृतिस्वरूपभावनया सत्वादीनामेव प्रकृतित्वामाम्नाय तथा गुणैरेव कार्यसंसिद्धौ तदन्यप्रकृतिकल्पनायां वैय्यर्थापाताच्च सत्वादिरेव प्रकृतिरिति सिद्धम् ।

परं सत्वाद्येकोनचतुष्टयसुखदुःखमोहगुरुलघु प्रसन्नत्वादिगुणरूपतया संयोगावियोगादिविकृतितया पुरुषोपसाधनतया च गुणरुपारोपणेनानूद्यते । परमेवं सति सत्वादित्रयमेवेति कथमुच्यते ? यतः प्रकृतिः अणुविभुनित्यसदसदात्मकस्थूलसूक्ष्मानंतादिजगद्योनिभूता अजैका अपरिच्छिन्नत्वादिगुणयुक्तेति सिद्धांतोपपत्तेः । एवं श्रुतिरप्याह

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां स्वरुपाः**

( श्वेताश्वतरे अ. ४ )

एवं विष्णुपुराणेऽपि

अव्यक्तं कारणं यत्तत् प्रधानं ऋषिसत्तमैः।।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्या सदसदात्मिका ।।

## पंचभूतानां तथा तद्गुणानां विकासः

"शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम् । त्रिगुणं तज्जगद्योनिरंतादिप्रभावाप्ययम् ।।"

अन्यथा सत्वादित्रयमेवेति निश्चते सति विभ्वादीन मानर्थक्यप्रसंगः । तथा अनंतद्रव्याद्यभावप्रसक्तिः । एवं च सर्वत्र शास्त्रीयविप्रतिपत्तिः प्रसज्य सर्वानिष्टापत्तिः स्यात् । अतएव परमैषयोऽपि द्रव्याणामनंतत्वं परिगणयंति । यथा कणादमुनिरप्याह ।

पृथिव्यापस्तेजो वायुराकाशकालदिगात्ममनः ।।

इति द्रव्याणि, वैशेषिक, अध्या–१

"एवमेव, द्रव्यविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेष-समवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्वज्ञानान्निःश्रेयसम् ॥"

वैशेषिक अ. १

इत्थं गुणानामानंत्यमपि श्रुतिपथमारोहति । यथा

रूपरसगंधस्पर्शाः संख्यापरिणामानि पृथक्त्वं संयोग-विभागौ परत्वापरत्वे बुद्धयः सुखदुःखेच्छाद्वेषप्रयत्नाश्च गुणाः।

वैशेषिक, अ. १

इत्याद्यनंतस्वरूपद्रव्यगुणबोधकवाक्येषु सर्वत्र विद्यमानेषु सत्सु कथं सत्वत्रयमेव कल्प्यते इति चेत् शृणु । यतः सर्वत्र साधारण्येन यदि अनुमानं कृतं स्यात् प्रधानस्य सत्वादिगुणाः केवलं सामान्यार्थद्योतका न भवंति किंतु विशेषार्थद्योतका इत्येवं सर्वथा सर्वत्र समुद्भासते । अतः केवलं सामान्यगुणत्रयेणै-वैतादृशप्रकृतेर्महान् विस्तारः कथं संभविमतुर्हति ।

एवं तदेतत् प्रतिपत्यवबोधहेत्वमेव सत्वादिगुणत्रयस्य विशेषार्थद्योतकत्वेन संकलितोऽस्ति अन्यथा गुणत्रयेणैव सर्वं संपद्येत तर्हि विज्ञानशास्त्रोक्तसर्वतत्वार्थानामवहेलनप्रसक्तिः प्रसज्येत ।

# उत्पत्तिस्थितिलया इति अवस्थात्रयम्

यथा प्रकृतेः संकोचविकसनादौ उत्पत्तिस्थितिलया इत्यवस्थात्रयमेव परिगण्यते । तद्वदेकस्यैवात्मनो ब्रह्मविष्णु-महेश्वरत्वेन स्थितित्रयं पौराणिकाः परिकल्पयंति । तद्यथा मूलप्रकृति-र्यदेश्वरेक्षणपूर्वकं प्रफुल्लितदशापन्नसारा भवति तदा प्रकृतिस्थि-त्यंतरात्मानमुद्दिश्य विद्वांसो ब्रह्मा इति तमात्मानं संबोधयंति । वस्तुतः सदा सर्वांतर्याम्यविकार्यात्मनो बृहत्वाल्पत्वादिस्थितिरेव-नास्ति । तथापि प्रकृतिप्रमापकत्वेन परिकल्पयंति । एवं चास्या एव नाम तमोऽवस्थेति समुच्चार्यते । 

विश्वरूपेण प्रसृतानंतरं प्रकृतिश्चिरकालं स्थित्यवस्थायां भासमानत्वात् सर्वव्यापित्वेन अर्थात् तद्व्याप्यभावेन विष्णुरिति संवेद्यते । यथा तास्मिन्नवसरे जीवानां कामाद्यनेकगुणाविर्भावात् तां रजोवस्थामित्यपि वर्णयंति ।

## अवस्थात्रयस्य लक्षणम्

एंव स्थितिद्वयानंतरं प्रकृतिर्यदा सर्वेश्वरमात्मनि मूलस्वरूपेण तिरोहिता भूत्वा स्वस्वरूपं याति तदा तस्यावस्थाया

महेश्वरत्वं अथवा महद्भावापन्नत्वं प्रदर्शयंति एतस्या एव नाम सत्वावस्थेति । एवं प्रकृतिगुणास्थितित्रयानुसारं परमेश्वरस्यापि देवतात्रयोपाध्यवकल्पनं समुल्लसति पुराणादिषु । इत्थं मत्स्पुराणेप्युपगतिमास्ति तद्यथा

## "एकमूर्तेस्त्रयोभेदाः"
## मूर्तित्रयस्य लक्षणम्

सविकारात् प्रधानात्तु महत्तत्वमजायत । महानिति यतः ख्यातिर्लोकानां जायते सदा । गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे । एकामूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।

इत्यादिवाक्यैः प्रकृतिसंबधादेव ईश्वरे आरोपितमिदं सर्वमिति निश्चीयते । एवमेव श्रुतिष्वपि तमवैकं विजानथ, आत्मानमन्यावाचो विमुंचथ । एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन । साक्षी चेता केवलो निर्गुणश्च ॥

अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः ॥

इत्यादिभिरात्मन एकत्वं संदर्श्य तदतिरिक्तवस्तुनोऽस्तित्वं सर्वत्र निराकृत्य

**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। तदात्मशक्तिं स्वगुणैर्निगूढाम्। उमासहायं परमेश्वरं प्रभुम्॥**

इत्यादि श्रुतिवाक्यैर्लोहचुंबकवदग्नेर्दाहकवदद्वितीयस्य परमात्मनः स्वभावसिद्धशक्तेर्निगूढत्वं सदा स्थायित्वमभेद्यत्वं समन्वयसिद्धांतेन सिद्धांतितम्।

## विशेषाद्वैतप्रतीतिः

एवमेव शक्तिस्वभावसिद्धपरमेश्वरस्याद्वैतत्वं **वेदमार्गप्रतिष्ठापनाचार्यैः श्रीशिवदेवरेणुकश्रीपतिपंडिताद्याचार्यैः** स्वकृतभाष्यग्रंथेषु समुद्दीपितम्। तथा अस्यैव नाम। **"विशेषाद्वैत"** मिति संबोधितम्। अतएवोपर्युक्तविषयाणां सामंजस्यं प्रस्फुटमिति सुधीभिरनुसंधेयम्।

एवमेव मुक्तिरपि सुलभसाध्येतिकन्नडभाषायां

"**सर्पभूषणशिवयोगि" नामकदिव्यपुरुषेण** अतीव स्वारस्येन गीतमस्याधोनिर्दिष्टवाक्यम् तथा

**मुक्तिदूरविल्लावो पारमार्थतत्वसुखवस्वरेगंवो यतिगदेनू । दूरविल्लावो मुक्तिदूरविल्लावो ।**

परमार्थतत्वानुसंधानशीलपुरुषस्य तथा तल्लीनयतेर्मुक्तिरतीव सामीप्येन भातीत्यस्य भावार्थः ॥

एवं संविभागे मूलप्रकृतेर्नकोऽपि व्यत्ययः । तस्मादेव श्रीशिवदेवश्रीकराद्याचार्यैस्तथा अस्माभिर्विवेचितविषय एव सुसंगत इति निश्चिनुमः ॥

यद्यपि प्रकृतेरनंतकार्यता तथापि मुख्यतस्त्रिविधकार्येण तथा तत्कार्यहेतुतया त्रिप्रकारकदेवताकल्पनं गुणत्रयविचारानुसारमेवेति संवादो भाति ।

एवं सत्वरजस्तमोगुणात्मकप्रधानमेव महदहंकारादिविनिमयेन जगदाकारेण परिणमते । आविर्भावात् पूर्वं सूक्ष्मरूपेण स्थितं कार्यं कारणव्यवहारादभिव्यज्यते एवं प्रकृतेरनंताःपरमाणवोऽपि द्व्यणुकत्र्यणुकादिक्रमेण प्रत्यक्षंदृश्यमाने दृश्यभव्यब्रह्मांडपर्यंतं

जगन्निर्मातुमारभंते । अणुविभुत्वादिविशिष्टेयं प्रकृतिः स्वसान्निध्यात् बुध्याख्यं महत्तत्वं प्रथमतो विस्तृतं करोति । सेयं बुद्धिर्विवेचनाविकारविकल्पाविचाराद्यनेकगुणसंयोगान्महदिति संज्ञां लभते ।

## बुध्यादिपंचविंशतितत्वानां विकासः

तथा चेयं तत्तद्विचारानुसारं सुखदुःखमोहात्मकं कार्यकारणभावं तथा महदादिद्रव्यजातं मिथः संयोजयति । एवं सत्येतादृशभव्यब्रह्मांडविस्तारः संघटितो भवति ।

अत्रैवं शंक्यते "बाह्यवस्तुषु बुध्यंतःकरणादिनैव कथं सुख-दुःखादिपरंपरा जायते इति चेत् परमत्रैवमस्य निरसनं क्रियते यथा—सुख-दुःखादीनामंतः करणस्य भावनामूलत्वाद्बाह्यविषयेष्वंतःकरणेनैव सुखादिकं प्रत्यक्षमनुभूयते । तदित्थमिदमेव

"सात्विको राजसश्चैव तामसश्च त्रिधामतम् ॥"

मत्स्यपुराणेऽपि

"सविकारात् प्रधानाच्च महत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा

इत्यादिभिर्महत्तत्वं निर्दिष्टम् । तथैतत्पंथानमनुसृत्य तन्महत्तत्वं तस्यामेव विलीयते । तथा आपूर्यत इति । एवं तत्र तस्योत्पत्तिस्थितिसंहारक्रममनुसृत्य सृष्टेर्गतित्रयं संभावितम् । यथा महाभारते ।

**"यद् यस्माज्जायते तत्वं तत्तत्र प्रविलीयते । लीयंते प्रतिलोमानि जायंते चोत्तरोत्तरम् ॥"**

अणूनां व्यष्टिसमष्टिगतसृष्टिस्थितिसंहाररूपाः परिणामाः स्थूलसूक्ष्मादि शरीररूपेण जीवानामिहपरलोकादिभोक्तृकार्य संसरणहेतवो भवंति ॥ तथा सर्वपदार्थानामात्मविलीनत्वात् सर्वांतर्याम्यात्मेति परिपठ्यते ।

## सांख्यशास्त्रविचारस्तथा सृष्ट्युत्पत्त्यादिक्रमः

परं सांख्यैस्तु सर्वकार्याणां प्रकृतिरेव मूलाधारेति परिगण्यते यतः सर्वत्र प्रधानस्यैव सर्वशक्तिमत्वात् तद्रूपमेव जगदादिसर्वमिति । तथैव—

प्रधानशक्तियोगाच्चेत् संगापत्तिः ।

सां. अ. ५

विविक्तबोधात् सृष्टिनिवृत्तिः

सां. अ. ३

प्रधानस्य सूदवत् पाके ।

एवं प्रकृतेः स्वरूपबोधकवाक्यानि शास्त्रेषु समुपलभ्यंते । यथा चिदानंदमयं ब्रह्म प्रतिबिंबसमन्वती । तमोरजः सत्वगुणाप्रकृतिर्द्विविधा च सा ॥

## प्रकृति विचारः

प्रकृतेरसाधारणशक्तिमत्वात् व्यक्तावस्थापन्नसमये सत्वादिगुणात्मकसृष्टेराविर्भावो भवति। एवमेतादृशसृष्टिक्रमः प्रकृतेः स्वभाव इति केचित् । केचित्तु काल इत्यपि विवदंति । यथा श्वेताश्वतरोपनिषदि ।

"स्वभावमेके कवयो वदंति । कालं तथान्ये परिमुह्यमानाः ॥ देवस्यैषा महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे । देवस्यैः स्वभावोऽयमाप्तकामस्य का स्पृहा ।

तथा प्रकृतिस्वरूपोऽपि निर्दिष्टोऽस्ति । 'प्रकृतया परमैश्वर्याप्रणवत्वात् प्रकृतिरिति (रामोत्तरतापे)

कार्यकारणकर्तुत्वे हेतुः प्रकृतिरुच्यते । भगवद्गीता

सांसिद्धि की स्वाभाविकी सहजा अकृता च या । प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥

मुंडकोपनिषत्

एवं नृसिंहतापनीयोपनिषदि —

" भूमिरापोऽनलो वायुः खं मनोबुद्धिरेवच । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् । सत्वं रजस्तम इति गुणाः प्रकृति संभवाः ॥

"मायामेतां शक्तिं विंद्यात् । माया चाविद्या स्वयमेव भवति ।" नृसिंहतापोपनिषदि

"मायया मोहितं जगत् ॥ भ्रामयन् सर्वभूतानि यंत्रारूढानि मायया । भगवद्गीतायां

यथा स्वप्ने द्रव्याभासं स्पंदते मायया मनः ॥ मांडुक्योपनिषदि

## महत्तत्वादिकानां तथा सत्वादि-गुणानां एवं इंद्रियाणामाविष्कारः

इत्थं प्रकृत्याविर्भूतमहत्तत्वं स्वावृतानंतगुणसहाय्येन सत्वरजस्तमसां संमिश्रणेन परिणतं सत् पृथिव्यादिसमष्टिरूपं गत्वा धर्माधर्मसंकलनात्मकोच्चनीचभावेन जीवानां व्यष्टिरूपोपाधिं संयोजयति ।

एवं चित्ताहंकारमनसात्मकस्यांतरेंद्रियस्यापि महत्तत्वमेव बीजमिति अतएव प्रकृतेर्महान् महतोऽहंकार इत्यादिसृष्टि-जननक्रमोऽपि शास्त्रे सूत्रबद्धमणिरिव सूचितोऽस्ति । यथा कपिलमुनिराह—

"सत्वरजस्तमसां साम्यावस्था मूलप्रकृतिः । प्रकृतेर्महान् महतोऽहंकारः ॥ अहंकारात् पंचतन्मात्राणि उभयमिंद्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पंचविंशतिगणः

इत्येवं कपिलमुनिः स्वसांख्यशास्त्रे सूत्रं सूत्रयति । इत्थमेतादृशमहत्तत्वं महद्रूपेण सर्वव्यापकभावेन चाविर्भूतत्वात् तस्यैव विष्णुरित्यादिव्यापकार्थद्योतकाभिधेयेन संकीर्त्यंते । एवं महदाख्यत्वादहंकारादीनामुत्पत्तिः सर्वत्र अंकुराच्छाखेव लक्ष्यते । यथा वैकारिकत्वराजासिकत्वादिभेदेनाहंकारस्त्रिविधतया श्रूयते । यथा—

"वैकारिकस्तैजसश्च भूतादिश्चैव तामसः । त्रिविधोऽयमहंकारो महतः संबभूवह ॥ तैजसादिंद्रियाणि स्युर्देवा वैकरिकाद्धश । एकादशं मनश्चात्र स्वगुणेनोभयात्मकम् ॥ भूततन्मात्रसर्गस्तु भूतादेरभवन् प्रजाः ॥ इति तथा प्राणस्तु

बुद्धेरेव वृत्तिभेद इति केचन भणंति । परमन्येषां मते जीववाचक इति यतो बुद्धेर्जडत्वात् ।

मनस्तूभयात्मकमिति कथितं तत्र् कथमिति चेत् अहंकारात्तत्त्वनियमानुसारं पंचतन्मात्राणि तथैकादशेंद्रियाण्युत्पद्यंते। तत्र ज्ञानकर्मोभयेंद्रियाणां सहकारित्वादुभयात्मकत्वमित्यवगंतव्यम्। एतेषामिंद्रियाणांदेवतावाचकत्वमपि सर्वत्र परिश्रूयते।

## तन्मात्राणामाविर्भावः



परंच तन्मात्रेंद्रियाणामुत्पत्तौ नियतक्रमो नास्ति। यत एतेषां कार्यकारणभावस्य संकल्प संबंधकत्वात् यद्यपि तन्मात्राणां संभवे क्रमोऽस्तीति शास्त्रे संवादः। तथापि तत्तु न नियतविषयः। यथा शास्त्रे नियतक्रम एवं न दृश्यते। तत्तु शब्दतन्मात्रात् स्पर्शतन्मात्रमित्यादिशास्त्रेणैकदा यथाक्रमः पठ्यते।

## पंचमहाभूतादीनामुत्पत्तिः

यद्यपि वयमिदमेव सत्यमिति मन्यामहे तर्हि अनेकेषां मतविरोधत्वमापतति। यथा

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम

यजुर्वेदे अ. १३

अस्मिन् मंत्रे हिरण्यगर्भशब्देन तेजसः प्रथमोत्पत्तिः प्रदर्श्यते· तथा अन्यत्र "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं प्रोक्तं तेन नारायणः स्मृतः ॥" मनुस्मृतौ अ. १

इत्येवं मन्वादिस्मृतौ जलोत्पत्तिरेव प्रथमतोऽभूदिति विशदीकृता ।

एवमन्यत्र उपनिषदादौ

आकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधिभ्यो अन्नं अन्नाद्रेतः

इत्येवं उपनिषदादिशास्त्रे आकाशोत्पत्तिरेव प्रथमतोऽभूदिति स्पष्टीकृतास्ति । एवं सर्वत्र पूर्वापरविरोधवाक्यपर्यालोचनेन तन्मात्रणां विषये न नियतक्रम इति सुस्पष्टं भाति ।

एवं पंचतन्मात्रद्वारेणैव भूतानां प्रादुर्भाव इति राद्धांतः। इत्थमेव पुराणेष्वपि अनुगीयते।

भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्जह। आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम्। आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्जह। वायुरुत्पद्यते तस्मात् तस्य स्पर्शगुणो मतः।

इत्यनेनापि पंचभूतानां तथा तन्मात्राणां क्रमाभावः पूर्वोक्त प्रकारेणालोडयितुं शक्यते। यथा—अग्नेरभावे जलस्य द्रवरूपाभावित्वासंभवात् अणूनां परस्परसंयोगवियोगाकर्षण विकर्षण-संकोचविकोचादिगुणानामग्निकार्यत्वात् जलतत्वाविर्भावो अग्नेः प्रथमतो भवितुं न शक्य इत्यास्माकीनं मतम् परमन्यैर्नानुमन्यते एतत्। यथा

## अणोर्विकासः



अणूनां वृद्धिह्रासादेः स्वभावत्वात् तद्विस्तारस्य जलतत्वमेव कारणम्। यतः स्वतो

द्रवीभूतविकसनस्वभावत्वात् यथा सूक्ष्मचेतनाविशिष्टाणु-परिणितवृक्षादीनां जलेनैव वृद्धिविस्तारादिप्रत्यक्षगोचरत्वात् अग्न्याधिक्ये तद्वृक्षादीनां विनाशानुभवात् जलतत्वस्यैव प्राथम्यमिति मन्वादितात्विकानां बुद्धिक्रीडा। एवं भूतोत्पत्तिमनुक्रम्य त्रयोविंशतितत्वानामुत्पत्तिर्भवति—यथा-कालांतरे अतिविस्तृते महत्तत्वे अहंकारस्य स्फूर्तिर्भूत्वा तेन व्योमवायुरादीनां पारंपर्येण सृष्ट्युत्पतिपर्यंतं लोकेऽनुभूयते। यथा अंकुरावस्थायां एकमूलोऽपि वृक्षः केषुचिदितदिनेषुगच्छत्सु वृद्धिगतः सन् तस्य सर्वभागेषु अनेकशाखाः स्वयमेवोत्पद्यंते। तद्वन्महत्तत्वादेवेतरेषामुत्पत्तिः॥

परं प्रकृतेर्विकृतिमयत्वात् तद्गतमहत्तत्वादीनामपि समयावच्छेदेन न्यूनाधिकविकृतिः स्वतः सिद्धैव।

## सृष्ट्युत्पत्तिक्रमः

एवं समयविशेषतः चतुर्विंशातितत्वानां संयोगविशेषसमवायानंतरं तेषां सर्वेषां घनरुपत्वं जायते एवं तदा अणुसमष्टिरूपं पृथिवीबीजमंडरूपेण परिणमत इति मन्वादीनां मतम्। यथा मनुराह।

अपएव ससर्जादौ तासु बीजमवासृजत् । तदंडम-
भवद्हैमं सहस्रांशुसमं प्रभम् ॥ मनु. अ १ ॥

तस्मिन् समये सर्वतत्वानां समाष्टित्वात् तदंडस्य सहस्रां-
शुसमप्रभत्वाद्युक्तिर्विहितैव । तदेतादृशांडः कालपरिपक्ववशाद
तिघनत्वेन प्रस्फुटो विस्तीर्णभावं यदा आपद्येत तदा तस्य
विस्तृतस्वरूपस्यैव पृथिवी इत्यभिधीयते ।

पृथिव्यावरणरूपब्रह्मांडेऽस्मिन तदेव चतुर्विंशतितत्वजातं परि-
णतं सत् स्थूलसूक्ष्मकारणोपाधिधारिणो अनंतजंतवो व्यष्टिभावेन
पशुपक्षिवृक्षमनुष्यादि स्थावरांतबोधका दैनंदिनं सृजमाना दृश्यंते ।
यदा यदा तत्वानां समाष्टिविच्छेदस्तदा तदा सर्वं तस्मात्
परिणतं भवति । यथा—

अनादिमायया सुप्तो यदा जीवः प्रबुद्धयते ।
( मांडुक्ये )

तस्मिंश्चान्यो मायया संनिरुद्धः ( श्वेताश्वेत )

सतोहि मायया जन्म युज्यते न तु तत्वतः
( मांडुक्ये )

क्षरं त्वविद्या ह्यमृतं तु विद्या ( श्वेताश्वेत )

इंद्रजालमिव मायामयम् ( मैत्रेयोपनिषदि )

सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः । निबध्नंति महाबाहो देहे देहिनमव्ययम् । भगवद्गीता ।"

इत्यादिमुनिवाक्यैः प्रकृतेर्गुणानामाविर्भावतिरोभावादिक्रियैव सर्वविषयस्य विशदीकरणे मूलाधारेति निश्चिनुमः ।।

एवं मूलप्रकृतेस्तथा परमात्मनः स्वस्वभावं यो सम्यग् वेत्ति स एव कृतकृत्यो भवितुमर्हतीति जानीयात् । अतः सुज्ञ पुरुषैरयमेव मार्गो अनुसरणीय इत्याशासे ।। 

* इति शुभम् *